श्री

# बदरीनाथ सुप्रभातम्



रच. मुरलीधर शास्त्री
बदरीनाथ

# ॥ श्री बदरीनाथ सुप्रभातम् ॥

( मुरलीधर शास्त्रिणा विरचितम् )

१. लक्ष्मीविलास नरसिंह गुणाकरेश
वैकुण्ठ केशव जनार्दन चक्रपाणे ।
भक्तार्तिनाशन हरे मधुकैटभारे
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

२. लक्ष्मीः प्रसन्नवदना जगदाद्यशक्तिः
कृत्वाङ्गरागललितं सुमनोज्ञवेषा ।
संस्तौति शब्दमधुरैर्मुरमर्दनं त्वां
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

३. ब्रह्ममहेशगुरुकाव्यसरस्वती च
संप्राप्य तुङ्गहिमश्रृङ्गमये प्रदेशे ।
संसेवयन्ति हि पदाम्बुजयुग्मकं ते
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

४. इन्द्रादयस्सुरगणाश्च विमानदिव्यैः
प्राप्ताः कराञ्जलिपुटा भवदन्तिके हि ।
उद्घोषयन्ति सततं जगदेकनाथं
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

५. सूर्यादयो ग्रहगणा नभसस्स्थले च
दस्रादितारकगणैस्सहितास्सुनम्राः ।
मन्दारचम्पककरा बहुपुष्पयुक्ताः
द्रष्टुं बदर्यधिपते तव सुप्रभातम् ॥

६. देवर्षिनारद सनन्दन योगिवर्याः
सप्तर्षयो भृगुमरीचिवसिष्ठमुख्याः ।
द्वारे पठन्ति शुभवेदसुरम्यगाथां
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

७. रम्भादयोऽप्सरगणाः सहनृत्तगीतैः
गन्धर्वतुम्बुरुमुखाः सहवाद्यघोषैः ।
गायन्ति गीतसरसैरिह कीर्तिपुञ्जं
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

८. श्रीशङ्करार्यमुनि मध्वमहायतीन्द्राः
रामानुजार्य प्रभुवल्लभ देशिकेन्द्राः ।
गाथा विरच्य निगमागम तत्त्वसाराः
नित्यं जगुस्तव यशो विमलं प्रभातम् ॥

९. भास्वानुदेति विगता हिमशीतबाधा
स्नात्वा च वह्निसलिले खलु यात्रिणो हि ।
नीत्वोपचारनिचयाः प्रभुदर्शनार्थं
तिष्ठन्ति चत्वरमुखे तव सुप्रभातम् ॥

# ॥ श्री बदरीनाथ सुप्रभातम् ॥

( मुरलीधर शास्त्रिणा विरचितम् )

१. लक्ष्मीविलास नरसिंह गुणाकरेश
वैकुण्ठ केशव जनार्दन चक्रपाणे ।
भक्तार्तिनाशन हरे मधुकैटभारे
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

२. लक्ष्मीः प्रसन्नवदना जगदाद्यशक्तिः
कृत्वाङ्गरागललितं सुमनोज्ञवेषा ।
संस्तौति शब्दमधुरैर्मुरमर्दनं त्वां
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

३. ब्रह्ममहेशगुरुकाव्यसरस्वती च
संप्राप्य तुङ्गहिमश्रृङ्गमये प्रदेशे ।
संसेवयन्ति हि पदाम्बुजयुग्मकं ते
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

४. इन्द्रादयस्सुरगणाश्च विमानदिव्यैः
प्राप्ताः कराञ्जलिपुटा भवदन्तिके हि ।
उद्घोषयन्ति सततं जगदेकनाथं
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

५. सूर्यादयो ग्रहगणा नभसस्स्थले च
दस्रादितारकगणैस्सहितास्सुनम्राः ।
मन्दारचम्पककरा बहुपुष्पयुक्ताः
द्रष्टुं बदर्यधिपते तव सुप्रभातम् ॥

६. देवर्षिनारद सनन्दन योगिवर्याः
सप्तर्षयो भृगुमरीचिवसिष्ठमुख्याः ।
द्वारे पठन्ति शुभवेदसुरम्यगाथां
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

७. रम्भादयोऽप्सरगणाः सहनृत्तगीतैः
गन्धर्वतुम्बुरुमुखाः सहवाद्यघोषैः ।
गायन्ति गीतसरसैरिह कीर्तिपुञ्जं
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

८. श्रीशङ्करार्यमुनि मध्वमहायतीन्द्राः
रामानुजार्य प्रभुवल्लभ देशिकेन्द्राः ।
गाथा विरच्य निगमागम तत्त्वसाराः
नित्यं जगुस्तव यशो विमलं प्रभातम् ॥

९. भास्वानुदेति विगता हिमशीतबाधा
स्नात्वा च वह्निसलिले खलु यात्रिणो हि ।
नीत्वोपचारनिचयाः प्रभुदर्शनार्थं
तिष्ठन्ति चत्वरमुखे तव सुप्रभातम् ॥

१०. हैमेषु राजतमयेषु घटेषु नीत्वा
शीतोष्णतोयदधिदुग्धघृतादिकं च ।
स्नानोन्मुखा द्विजवरास्सहवेदपाठैः
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

११. पञ्चामृतेन सलिलेन सुगन्धद्रव्यैः
अभ्यङ्गनादि सुमनोहर सम्भृतैश्च ।
सिञ्चन्ति चार्चकवराः स्तुतिभिर्मनोज्ञैः
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

१२. श्रीखण्डचन्दन सुगन्धयुजा विलिप्य
कौशेयरत्नखचितैश्च सुकान्तिमद्भिः ।
वस्त्रैर्वराभरणपुष्पचयैर्भवन्तं
आभूषयन्ति सततं तव सुप्रभातम् ॥

१३. भोज्यानि षड्रसमयानि विधाय सूदाः
दध्योदनादि घृतपायसमिश्रितानि ।
नित्यं प्रफुल्लमनसा विनिवेदयन्ति
तुभ्यं बदर्यधिपते तव सुप्रभातम् ॥

१४. जाम्बूनदीय बहुमूल्यमयं सुपात्रं
आपूर्य मिश्रितघृतेन च वर्तिकाभिः ।
नीराजनेन सहवाद्यमृदङ्गघोषैः
संतर्पयन्ति विबुधास्तव सुप्रभातम् ॥

१५. दैत्यं सहस्रकवचं वरदानमत्तं
उन्मूलितुं सुरगणा बहुधाऽर्थयन्तः ।
नारायणो नरसखोऽवततार भूमौ
संहत्य दानवपतिं विदधे प्रभातम् ॥

१६. संसारसागरसमुत्तरणैकहेतोः
अष्टाक्षरं सकलसिद्धिकरं सुमन्त्रम् ।
आविश्चकार जगदभ्युदयस्य सिद्ध्यै
क्षेमाय मानवगुणस्य हि सुप्रभातम् ॥

१७. यो वै हरिः कृतयुगे बदरीवनेऽस्मिन्
तेपे तपो बहुजनस्य हिताय कृच्छ्रम् ।
श्रीश्रीनिवास जगदेक दयैकसिन्धुः
कुर्याज्जनस्य सकलस्य स सुप्रभातम् ॥

१८. इत्थं प्रभुं नरहरिं करुणाब्धिसेतुं
लक्ष्मीपतिं सुरगुरुं प्रणिपत्य मूर्ध्ना ।
याचे मुदा द्विजवरो मुरलीधराख्यो
भद्रं करोतु सततं बदरीविशालः ॥

बदरीनाथ.

Coronation Press, Mysore.

१०. हैमेषु राजतमयेषु घटेषु नीत्वा
शीतोष्णतोयदधिदुग्धघृतादिकं च ।
स्नानोन्मुखा द्विजवरास्सहवेदपाठैः
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

११. पञ्चामृतेन सलिलेन सुगन्धद्रव्यैः
अभ्यङ्गनादि सुमनोहर सम्भृतैश्च ।
सिञ्चन्ति चार्चकवराः स्तुतिभिर्मनोज्ञैः
भूयात् बदर्यधिपते तव सुप्रभातम् ॥

१२. श्रीखण्डचन्दन सुगन्धयुजा विलिप्य
कौशेयरत्नखचितैश्च सुकान्तिमद्भिः ।
वस्त्रैर्वराभरणपुष्पचयैर्भवन्तं
आभूषयन्ति सततं तव सुप्रभातम् ॥

१३. भोज्यानि षड्समयानि विधाय सूदाः
दध्योदनादि घृतपायसमिश्रितानि ।
नित्यं प्रफुल्लमनसा विनिवेदयन्ति
तुभ्यं बदर्यधिपते तव सुप्रभातम् ॥

१४. जाम्बूनदीय बहुमूल्यमयं सुपात्रं
आपूर्य मिश्रितघृतेन च वर्तिकाभिः ।
नीराजनेन सहवाद्यमृदङ्गघोषैः
संतर्पयन्ति विबुधास्तव सुप्रभातम् ॥

१५. दैत्यं सहस्रकवचं वरदानमत्तं
उन्मूलितुं सुरगणा बहुधाऽर्थयन्तः ।
नारायणो नरसखोऽवततार भूमौ
संहत्य दानवपतिं विदधे प्रभातम् ॥

१६. संसारसागरसमुत्तरणैकहेतोः
अष्टाक्षरं सकलसिद्धिकरं सुमन्त्रम् ।
आविश्चकार जगदभ्युदयस्य सिद्ध्यै
क्षेमाय मानवगुणस्य हि सुप्रभातम् ॥

१७. यो वै हरिः कृतयुगे बदरीवनेऽस्मिन्
तेपे तपो बहुजनस्य हिताय कृच्छ्रम् ।
श्रीश्रीनिवास जगदेक दयैकसिन्धुः
कुर्याज्जनस्य सकलस्य स सुप्रभातम् ॥

१८. इत्थं प्रभुं नरहरिं करुणाब्धिसेतुं
लक्ष्मीपतिं सुरगुरुं प्रणिपत्य मूर्ध्ना ।
याचे मुदा द्विजवरो मुरलीधराख्यो
भद्रं करोतु सततं बदरीविशालः ॥

**बदरीनाथ.**

Coronation Press, Mysore.

